॥ श्रीवेङ्कटेशविजयस्तोत्रम् ॥

दैवतदैवत मङ्गलमङ्गल पावनपावन कारणकारण ।
वेङ्कटभूधरमौलिविभूषण माधव भूधव देव जयीभव ॥ १॥

वारि[दसन्निभ]देह दयाकर शारदनीरजचारुविलोचन ।
देवशिरोमणिअपादसरोरुह वेङ्कटशैलपते विजयीभव ॥ २॥

अञ्जनशैलनिवास निरञ्जन रञ्जितसर्वजनाञ्जनमेचक ।
मामभिषिञ्च कृपामृतशीतलशीकरवर्षिदृशा जगदीश्वर ॥ ३॥

वीतसमाधिक सारगुणाकर केवलसत्त्वतनो पुरुषोत्तम ।
भीमभवार्णवतारणकोविद वेङ्कटशैलपते विजयीभव ॥ ४॥

स्वामिसरोवरतीररमाकृतकेलिमहारसलालसमानस ।
सारतपोधनचित्तनिकेतन वेङ्कटशैलपते विजयीभव ॥ ५॥

आयुधभूषणकोटिनिवेशितशङ्खरथाङ्गजितामतसम्मत ।
स्वेतरदुर्घटसङ्घटनक्षम वेङ्कटशैलपते विजयीभव ॥ ६॥

पङ्कजना[नीनिलया]कृतिसौरभवासितशैलवनोपवनान्तर ।
मन्द्रमहास्वनमङ्गलनिर्झर वेङ्कटशैलपते विजयीभव ॥ ७॥

नन्दकुमारक गोकुलपालक गोपवधूवर कृष्ण [परात्पर] ।
श्रीवसुदेव जन्मभयापह वेङ्कटशैलपते विजयीभव ॥ ८॥

शैशवपातितपातकिपूतन धेनुककेशिमुखासुरसूदन ।
कालियमर्दन कंसनिरासक मोहतमोपह कृष्ण जयीभव ॥ ९॥

पालितसङ्गर भागवतप्रिय सारथिताहिततोषपृथासुत ।
पाण्डवदूत पराकृतभू[भर पाहि] परावरनाथ परायण ॥ १०॥

शातमखासुविभञ्जनपाटव सत्रिशिरःखरदूषणदूषण ।
श्रीरघुनायक राम रमासख विश्वजनीन हरे विजयीभव ॥ ११॥

राक्षससोदरभीतिनिवारक शारदशीतमयूखमुखाम्बुज ।
रावणदारुणवारणदारणकेसरिपुङ्गव देव जयीभव ॥ १२॥

काननवानरवीरवनेचरकुञ्जरसिंहमृगादिषु वत्सल ।
[श्रीवर]सूरिनिरस्तभवादर वेङ्कटशैलपते विजयीभव ॥ १३॥

वादिसाध्वसकृत्सूरिकथितं स्तवनं महत् ।
वृषशैलपतेः श्रेयस्कामो नित्यं पठेत् सुधीः ॥ १४॥

॥ इति श्रीवेङ्कटेशविजयस्तोत्रम् ॥